॥ वैराग्यपञ्चकम् ॥

क्षोणी कोण शतांश पालन कला दुर्वार गर्वानल-
क्षुभ्यत्क्षुद्र नरेन्द्र चाटु रचना धन्यान् न मन्यामहे ।
देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा
दाना मुष्टिमुचे कुचेल मुनये दत्ते स्म वित्तेशताम् ॥ १ ॥

शिलं किमनलं भवेदनलमौदरं बाधितुं
पयः प्रसृति पूरकं किमु न धारकं सारसम् ।
अयत्न मल मल्लकं पथि पटच्चरं कच्चरं
भजन्ति विबुधा मुधा ह्यहह कुक्षितः कुक्षितः ॥ २ ॥

ज्वलतु जलधि क्रोड क्रीडत्कृपीड भव प्रभा-
प्रतिभट पटु ज्वाला मालाकुलो जठरानलः ।
तृणमपि वयं सायं सम्फुल्ल मल्लि मतल्लिका
परिमलमुचा वाचा याचामहे न महीश्वरान् ॥ ३ ॥

दुरीश्वर द्वार बहिर्वितर्दिका-
दुरासिकायै रचितोऽयमञ्जलिः ।
यदञ्जनाभं निरपायमस्ति मे
धनञ्जय स्यन्दन भूषणं धनम् ॥ ४ ॥

शरीर पतनावधि प्रभु निषेवणापादनात्
अबिन्धन धनञ्जय प्रशमदं धनं दन्धनम् ।
धनञ्जय विवर्धनं धनमुदूढ गोवर्धनं
सुसाधनमबाधनं सुमनसां समाराधनम् ॥ ५ ॥

नास्ति पित्रार्जितं किञ्चिन्न मया किञ्चिदार्जितम् ।
अस्ति मे हस्ति शैलाग्रे वस्तु पैतामहं धनम् ॥ ६ ॥

॥ इति वेदान्त देशिकेन रचितं वैरग्यपंचकं सम्पूर्णम् ॥